कर्त्ता देशकालौ संकीर्त्य अस्य ब्रह्मचारिणो गोदानाख्यं कर्म करिष्ये ।

ब्रह्मचारी कृतनित्यक्रियः कृतप्रातरग्निकार्यश्च प्राणानायम्य तिथ्यादि संकीर्त्य मम गृहस्थाश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्त्तनं करिष्ये ।

वरपिता देशकालौ संकीर्त्य अस्यामुकशर्मणः पुत्रस्य करिष्यमाणविवाहाङ्गभूतं गणपतिपूजनं स्वस्तिपुण्याहवाचनम् अङ्कुरार्पणं मातृकापूजनं नान्दीश्राद्धं ग्रहयज्ञं मण्डपदेवताप्रतिष्ठां च करिष्ये ।

एवं वधूपिताऽपि । अस्या अमुकनाम्न्याः कन्याया इति विशेषः । ततः कन्यादाता प्राङ्मुख उपविश्य देशकालौ स्मृत्वा करिष्यमाणविवाहाङ्गभूतं वाग्दानमहं करिष्ये । ततस्स एव गोत्रोच्चारादिपूर्वमिमां कन्यां तस्मै वरायादिष्टे मुहूर्त्ते दास्ये इति वदेत् ।

अथ वरो यस्मिन्नहनि विवाहस्तत्र देशकालौ स्मृत्वा कन्योद्वाहं धर्मप्रजासिद्ध्यर्थमहं करिष्ये इति संकल्पं कुर्यात् ।

अथ कन्यादाता देशकालौ स्मृत्वा मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये ऽनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या द्वादशावरान् द्वादश परान् पवित्रीकर्त्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना यथाशक्त्यलंकृतकन्यादानमहं करिष्ये ।

कन्या तारयत्वित्यादि । पुनः मम समस्तेत्यादि प्रीतये इत्यन्तमुक्त्वा ऽमुकसप्रवरगोत्रोत्पन्नामित्यादिकाम् एतादृशीं कन्यां वरार्थिनीं श्रीरूपिणीं प्रजापतिदैवत्यां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति कुशा-

फलब्रह्मलोकप्राप्तिकामो ऽस्यामुत्पादयिष्यमाणया कन्यया द्वादशा-वरानेकविंशत्यवरांश्च तावदपरान् पुरुषान् पवित्रीकर्त्तुमात्मानं चामुकसप्रवरगोत्रादिरहं प्रजापतिदेवत्याममुकसप्रवरगोत्रायां कन्या-ममुकसप्रवरगोत्राय तुभ्यं संप्रददे इति वाक्यम्। ततः पूर्ववदिति।

तदुक्तम्, आग्नेये।

एवं यच्छन्ति ये कन्यां यथाशक्त्या स्वलंकृताम् ।
विवाहकाले संप्राप्ते यथोक्तसदृशे वरे ॥
क्रमोत्क्रमक्रतुशतमनुपूर्वं लभन्ति ते ।
तावत्स्वर्गं लभेद्यावत् सर्वलोकान्तु संघकः ॥
महीदातुश्च गोदातुर्नित्यदातुश्च ये रथाः ।
कन्यादानानुगाः पश्चात्समायान्ति त्रयो रथाः ॥
कन्यादश्चाश्वमेधी च प्राणदाता द्विजेषु च ।
समं यांति रथा ह्येते त्रयो वै नात्र संशयः ॥
पूर्तधर्ममवाप्नोति यथावद्विधिकल्पितम् ।
यस्मात् कन्याप्रदानेन दातव्या श्रेय इच्छता ॥
दातव्येत्यस्य तस्मादित्यादिः ।
ब्राह्मेण च विवाहेन यस्तु कन्यां प्रयच्छति ।
ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः ॥
यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥
अप्रजायां तु कन्यायां न भुञ्जीत कदाचन । इति ।

आश्वलायनीये।

अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहस्तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयत इति।

स्कान्दे।

वैवाहिकप्रदानं च यो ददाति दयापरः।
महेन्द्रभवने याति सेव्यमानो ऽप्सरोगणैः॥
आत्मीकृत्य सुवर्णेन परकीयान्तु कन्यकाम्।
धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते॥
श्रुत्वा कन्याप्रदानञ्च पितरश्च पितामहाः।
विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते॥ इति

भविष्ये।

कन्यामलंकृतां दद्यात् समाहूय नराधिप।
विद्यार्थिने ब्राह्मणाय कन्यादानं तदुच्यते॥ इति।

दक्षीये च।

मातापितृविहीनं तु संस्कारोद्वाहनादिभिः।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते॥ इति।

ततो वरो यथोक्तवेदिकायामुपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य प्रतिगृहीतायामस्यां वध्वां भार्यात्वसिद्धये गृह्याग्निसिद्धये च विवाहहोमं करिष्ये। वरः स्वगृहे देशकालौ संकीर्त्य मम विवाहाग्नेर्गृह्यत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशनीयहोमं करिष्ये। एवं संस्कारान्तरेष्वप्यूह्यम्।

## इति संस्कारसंकल्पसंग्रहः ।

## अथ तन्त्रसंकल्पाः ।

ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा, अस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा, ममास्य शिशोः आयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा, अस्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यायब्रह्मवर्चसतेजइन्द्रियायुर्बलफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा च श्रीपरमेश्वरप्रीत्यर्थं जातकर्मनामकरणसूर्यावलोकननिष्क्रमणोपवेशनान्नप्राशनाख्यानि कर्माणि तन्त्रेण करिष्ये। तदङ्गस्वस्तिपुण्याहनान्दीश्राद्धं च करिष्ये। तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये ।

तानि कृत्वा प्रते* ददामि० मेधां† ते० अश्मा‡ भव परशुः० इन्द्रश्रेष्ठा०§ अस्मे|| प्रयं० । आदौ गणपतिनाम स्वकुलदेवताभक्तः मासनाम नाक्षत्रं नाम ततो व्यावहारिकं नाम । ततः कर्णे श्रीगणेशकुलदेवतानाम्ना त्वम् अमुकभक्तोऽसि । एवं प्रकारेण सर्वाणि नामानि । कुलदेवतानाम्ना ऽयं दुर्गाभक्तो भवतः सर्वान् ब्राह्मणान् अभिवादयते आयुष्मान् भव दुर्गाभक्त इति । एवं सर्वाणि नामानि ।

## ततः सूर्यावलोकनम् ।

अग्निं चन्द्रं धेनुं च दर्शयेत् । स्वस्ति¶ नो मिमी० तुन इति

---

* आ. गृ. अ. १ कं. १५ । † आ. गृ. अ. १ कं. १५ ।
‡ आ. गृ. अ. १ कं. १५ । § ऋ. सं. अ. २ अ. ६ व. २७ ।
|| ऋ. सं. अ. ३ अ. २ व. २० । ¶ ऋ. सं. अ. ८ अ. ७ व. ४ ।

शिशुमङ्कमारोप्य आप्लुः* शि० १२ इति जपेत्। तच्चक्षुः० † इत्यृचा इति सूर्यं निरीक्षयेत्।

## ततो निष्क्रमणम्।

इन्द्रादिलोकपालानां प्राच्यादिदिशां चन्द्रार्कवासुदेवगगनानां च यथाक्रमं पूजां कृत्वा कनिक्रददिति‡ मन्त्रेण शिशुं मातुलक्रमं नयेत्।

## अथोपवेशनम्।

चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च।
निक्षेपार्थमिदं दद्मि ते त्वां रक्षन्तु सर्वदा॥
अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः॥

इति देवान् प्रार्थ्य चतुरस्रस्थण्डिले विष्णुं संपूज्य धान्यराशिं कृत्वा तदुपरि शिशुमुपवेश्य रक्षां कुर्यात्। ॐ ह्रीं जूँसः अमुकं र० रक्षतात् सः जूँ ह्रीं ॐ इति रक्षां कृत्वा पूपादिभिर्भूतगणं गणेशमभ्यर्च्य प्रदक्षिणं कारयित्वा शिशुं तोषयेत्।

## भूम्युपवेशनम्।

ततो वराहपृथिवीगुरुदेवद्विजान् पूजयित्वा भूमिमुपलिप्य तत्र धान्यराशिं कृत्वा तत्र मण्डलं कृत्वा तत्र शङ्खतूर्यादिमाङ्गलिकध्वनौ क्रियमाणे शिशुमुपवेशयेदेभिर्मन्त्रैः।

रक्षैनं वसुधे देवि सदा सर्वगतं शुभे।
आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये॥

---

* ऋ. सं. अ. ८ अ. ५ व. २२। † ऋ. सं. अ. ५ अ. ५। व. ११।
‡ ऋ. सं. अ. २ अ. ८ व. ११। § ऋ. सं. अ. ५ अ. ४ व. ३०।

स्थण्डिलादि । अन्वाधाने प्रजापतिं कर्मसंख्यया । अथवा आज्योत्पवनमात्रं कृत्वा होमः कार्यः । तस्मिन् पक्षे अन्वाधानमिध्माबर्हिरित्यादि न भवति । देशकालातिपत्तिदोषपरिहारद्वारा श्री० प्रायश्चित्तहोमं करिष्ये । स्थण्डिलादिपूर्वोत्तरतन्त्रकरणपक्षे अन्वाधाने कर्मणोपसंख्यया प्रजापतिमुद्दिश्य होमं कुर्यात् । केवलोत्पवनपक्षे पूर्वोत्तरतन्त्रं नास्ति । कृच्छ्रादिसंकल्पः कुमारेण कार्यः । मम जातकर्मनामकरणनिष्क्रमणोपवेशनान्नप्राशनसंस्काराणां प्रमादादतिपत्तौ प्रत्येकं पादकृच्छ्रं चूडायाः अर्धकृच्छ्रं यथासम्भवप्रत्याम्नायद्वारा अहमाचरिष्ये । ततो मुख्यसङ्कल्पः । अस्य कुमारस्य जातकर्मनामकरणनिष्क्रमणोपवेशनान्नप्राशनकर्मणां करिष्यमाणयोश्चौलोपनयनयोस्तन्त्रेण स्वस्तिपुण्याहवाचनं नान्दीश्राद्धमुपनयनाङ्गत्वेन मण्डपदेवताप्रतिष्ठापनं च करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये । नान्दीश्राद्धान्तं कृत्वा जातकर्मादिसंस्कारान् क्रमेण कुर्यात् । तथाहि । अस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये । तत्कृत्वा अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्री० नामकर्म करिष्ये । तत् कृत्वा अस्य कुमारस्य आयुरभिवृद्धिद्वारा श्री० सूर्यावलोकनं करिष्ये । तत् कृत्वा अस्य कुमारस्य आयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्री० निष्क्रमणं क० । तत् कृत्वा अस्य कुमारस्य आयुरभिवृद्धिद्वारा श्री० उपवेशनं क० । तत् कृत्वा अस्य कुमारस्य मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायु-

रभिहड्डिबीजगर्भसमुद्भवैनोनिबर्हणदारा श्री० अन्नप्राशनं करिष्ये । तत् कृत्वा चौलं स्थापयित्वा वह्न्यादिस्थापनं कुर्यात् प्रयोग-बहिर्भूतः । प्रयोगान्तर्भूतस्तु सर्वकर्मसु मुख्यसङ्कल्पान् कृत्वा नान्दी-श्राद्धान्ते जातकर्मादिसंस्कारान् कृत्वा देवकर्मप्रतिष्ठादि कुर्यात् इत्यादि बोध्यम् ॥ १२ ॥

तमेवाह ।

**गर्भाधेति** । गर्भार्थमाह । **शोणितेति** । तत्र विशेषमाह । **गात्रेति** । तच्छरीरेत्यर्थः । गोत्रेति पाठे कुलेत्यर्थः । इदमग्रे व्यक्तीभविष्यति । कालस्यागे मानाभावादाह । **यथाकालमिति** । त्वर्थमाह । **पुनरिति** ॥ १३ ॥

मुख्यगर्भशब्दार्थावधिकत्वस्य तत्सम्बन्धित्वस्य च तत्कालस्याशा-स्त्रयार्थमाह । **गर्भाधानमिति** । गर्भश्च यथा तद्घटितहायन-मित्यर्थः । तत्रार्थात्तद्दिनादारभ्यैवेति बोध्यम् । सुप्सुपेति पञ्चमी-समासलब्धमर्थमाह । **अवधिमिति** । आदिमिति त्वपपाठः । जननमित्यत्रावधिमित्यादेरनुषङ्गः । जन्मनो वेति पाठान्तरम् । तथाच

**नारदीयसंहितायाम्** ।

> आधानादष्टमे वर्षे जन्मतो वाऽग्रजन्मनाम् ।
> राज्ञामेकादशे मौञ्जिबन्धनं द्वादशे विशाम् ॥
> जन्मतः पञ्चमे वर्षे वेदशास्त्रविशारदः ।
> उपनीतो यतः श्रीमान् कार्यं तत्रोपनायनम् ॥ इति ।

**उपनयनमेवोपेति** । निष्टत्त्मेषणात् प्राकृतार्थणिजन्ताद्भावे

च्युङिति भावः । अथ क्रमे हेतुमाह । वृत्तेति । एतन्मध्ये स्वार्थे ऽणिति त्वपपाठः । अतएव तथोक्तिरन्यथा नयनमेव नायनमिति ब्रूयादन्यथा ऽसङ्गतिः स्पष्टैव । पूर्वपदे वृद्धेरापत्तेरुत्तरपदे दुर्लभ-त्वाच्च । वस्तुतस्तदपि दुर्वचं, गतीनां प्राक् सुबुत्पत्तेः समासात् सुबुत्पत्तिं विना च तद्धितोत्पत्त्ययोगात् प्रज्ञादिष्वपाठाच्च । तस्या-नित्यत्वं प्रज्ञादेराकृतिगणत्वं चागतिकगतिः । उक्तप्रकारः

निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ।

इति हरिणोक्तः । णेरणाविति सूत्रे भाष्यादावपि स्फुट-मेतत् । यदि तु स्वार्थे ऽणित्येव साम्प्रदायिकः पाठस्तर्हीत्थं बोध्यः । मूलेऽपि तदा औपनायनमित्येव पाठः । तस्मादाकृतिगणत्वेन विशिष्टादेवाणि तद्धितेष्वित्यादिवृद्धावन्येषामपीति उत्तरपदस्य दीर्घः आर्षत्वेनानुशतिकादित्वकल्पनयोभयपदवृद्धिर्वा । अतएव

गर्भाष्टमे ऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।

इत्येवमेव **मनुपाठो मेधातिथिना** तथा व्याख्यात इति बोध्यम् । स्वस्य च प्रियमात्मनः इत्येतद्विषयतामत्र दार्ढ्याय पुनराह । **अनेच्छयेति** । विप्रामित्यत्र बहुत्वमविवक्षितं, ब्राह्मणस्येतिव-ज्जातिपरतया निर्वाहात् । राज्ञामित्यत्र तु क्षत्रियमात्रसंग्रहाय तत् । अन्यथा ऽभिषिक्तभ्रमः स्यादिति सूचयन्नाह । **वैश्यस्येति** । यद्यपीच्छया विकल्प उक्तस्तथापि तयोर्मध्ये आद्यस्य मुख्यत्वमन्यस्य गौणत्वम् । **मनुना** तस्यैवैकस्य सर्वत्राभिधानात् । तदेतद् ध्वनय-न्नाह । **गर्भेति** । **सर्वत्र** उभयत्र । तत्र हेतुमाह । **गर्भादिति** । तुरेवार्थे । **स्मृत्यन्तरेति** । **मन्वित्यर्थः** । ननु तत्र पृथगुक्त्या तथा

ऽस्तु प्रकृते तु तस्य समासघटकस्य निष्कृष्य कथमनुवृत्तिः अत एव तच पृथगङ्गिरत आह । **समासे इति । केषामिति ।** यथा तत्र तस्य तथा कृत्वा किमा परामर्शस्तथा ऽत्रानुवृत्तिरित्यर्थः । अन्यथा सर्वनाम्नां प्रधानपरामर्शित्वनियमात्तदसङ्गतिः स्पष्टैवेति भावः । वाक्यार्थपूर्त्तये आह । **अप्यापीति ।** प्राग्वदिति भावः । एवं च सर्वत्र मुख्यकालः स एव । तदभावे एकत्रोक्तो न्यायो ऽसति बाधके ऽन्यत्रापीति न्यायेन क्षत्रियादावपि स कालो ग्राह्यः । अतएवाष्टमे वर्षे ब्राह्मणमुपनयीतैकादशे क्षत्रियं द्वादशे वैश्यमिति गृह्यसूत्रं सङ्गच्छते । अतएवात्र राजशब्दः क्षत्रियजातिमात्रवचनो नाभिषेकादिगुणयुक्तपर इति बोध्यम् । एके इत्यादेरर्थमाह । **कुलेति ।**

**आपस्तम्बसूत्रेऽपि** गर्भाष्टमेषु ब्राह्मणमुपनयीतेति बहुवचनं गर्भषष्ठसप्तमयोः प्राप्त्यर्थम् ।

**हेमाद्रौ बुधः ।**

गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनयेदिति ।

**धर्मसूत्रेऽपि ।**

वसन्ते ब्राह्मणमुपनयीतेति । काम्योपनयने कालविशेषानाह,

**माधवीये मनुः ।**

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनो ऽष्टमे ॥ इति ।

**विष्णुरपि ।**

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।

अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥ इति ।

इदं च त्रैवर्णिकविषयम् । तथाच

संग्रहे ।

सप्तमे वाऽष्टमे वर्षे नवमे दशमे तथा ।
एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥
ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम् ।
पशून् कामयमानो वै प्राप्नुवन्ति यथाक्रमम् ॥ इति ।

धर्मसूत्रे आपस्तम्बोऽपि ।

अथ काम्यानि सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाममिति । गुरुशुक्रादिशुभग्रहबलालाभे प्रकारान्तरेण वा प्रतिबन्धे सति पञ्चमादारभ्याषोडशादाद्वाविंशादाचतुर्विंशाद्विप्रादीनां क्रमेण कार्यमित्यग्रे स्फुटीभविष्यति ।

ज्योतिर्न्टसिंहेन विशेष उक्तः ।

उत्तरायणगे सूर्ये कर्त्तव्यं ह्यौपनायनम् ॥ इति ।

आश्वलायनगृह्येऽपि ।

उदगयने आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इति ( आ.गृ.अ.१ क.४ ) ।

श्रुतिः ।

वसन्ते ब्राह्मणमुपनयीतेति ।

वराहः ।

माघादिपञ्चमासेषु मेखलाबन्धनं शिशोः ।

ज्येष्ठमासे न सर्वेषाम् इति ।

हेमाद्रौ ज्यौतिषे ।

माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते । इति ।

एतच्च वर्णत्रयसाधारणम् तत्रैव "ऋतुर्वसन्तः शुभदोऽग्रजानाम्" इति ।

वृहस्पतिः ।

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना । इति ।

भृगोरङ्गिरसो मौढ्ये कर्त्तव्यं नोपनायनम् । इति च ।

भृगुः शुक्रः । अङ्गिरा गुरुः ।

ज्योतिर्न्टसिंहः ।

तृतीया पञ्चमी षष्ठी द्वितीया वाऽपि सप्तमी ।

पक्षयोरुभयोश्चैव विप्रेषेणैव पूजिताः ॥

कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा । इति ।

संग्रहे ।

रिक्ताऽष्टमीपर्वतिथीननध्यायांश्च वर्जयेत् । इति ।

अनध्याया नित्या नैमित्तिकाश्च । युगादित्वेन मन्वादित्वेन चातुर्मास्यद्वितीयात्वेन च निषेधितानां प्रतिप्रसवमाह,

भरद्वाजः ।

या चैत्रवैशाखसिता तृतीया माघे च सप्तम्यथ फाल्गुनस्य ।

कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥ इति ।

शुचावूर्ज्जे तपस्ये च या द्वितीया विधुक्षये ।

चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥ इति ।

गर्गः ।

वसिष्ठसंहितायां ।

प्रशस्ता प्रतिपत् कृष्णे न पूर्वा परसंयुता ।

उपनीतो यतः श्रीमान् विद्यावान् धनवान् भवेत् ॥ इति ।

ज्योतिष्फलोदये ।

ज्येष्ठे द्वितीया सितजाऽऽश्विने तु दशम्यथो माघसिता चतुर्दशी ।

मद्वादशी सामगवकृचाभ्यां त्याज्याखिलमाः सोपपदा व्रतादौ ॥ इति ।

स्मृत्यन्तरे ।

चातुर्मास्यद्वितीयास्तु मन्वादिषु युगादिषु ।

अनध्यायस्तु कर्त्तव्यो या च सोपपदा तिथिः ॥

सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता ।

चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ इति ।

अपरार्के ।

नष्टे चन्द्रे ऽष्टमे शुक्रे निरंशे चैव भास्करे ।

कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे ॥ इति ।

निरंशलक्षणं

राशेः प्रथमराशिस्थो निरंशः सूर्य उच्यते । इति ।

गलग्रहस्तु,

ज्योतिर्निबन्धे ।

त्रयोदशीचतुष्कं च सप्तम्यादित्रयं तथा

चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः ॥ इति ।

गलग्रहनिषेधस्यापवादमाह,

भरद्वाजः ।

विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।

उपनीतस्त्वनध्याये पुनः संस्कारमर्हति ॥ इति ।

वसन्तर्त्तौ च्छलन्तरीयशुक्लपक्षे च गलग्रहो न दोषायेति फलितोऽर्थः ।

पारिजाते ब्राह्मे विशेषः ।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।

तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ॥

जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु ।

मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥

ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।

मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते ॥

कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ।

तदपत्यञ्च संस्कार्यमपरे त्वाहुरन्यथा ॥

संस्कारे मन्त्रहोमादीन् करोत्याचार्य एव तु ।

उपनेयं च विधिवदाचार्यः स्वसमीपतः ॥

आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।

कन्यास्त्रीकरणादन्यत् सर्वं विप्रेण कारयेत् ॥

एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ । इति ।

स्मृत्यर्थसारेऽप्येवम्। तथाचोपनयनं विधिनाऽऽचार्यसमीपनयनमग्निसमीपनयनं सावित्रीवाचनं वा। अन्यदङ्गं यथाशक्ति कार्यम्। विवाहस्य कन्यास्वीकारो ऽन्यदङ्गमिति। अतएव तेषां विवाहप्रसक्तिसत्त्वात्तत्कनीयसां परिवेदनदोषापवादो वक्ष्यते।

केचिद्वाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ।
अमृते च मृते पत्यौ जारजौ कुण्डगोलकौ॥ इति

हरदत्तः। उपनयनं विद्यार्थस्येति धर्मसूत्रवचनात्।

शङ्खलिखितावपि।

नोन्मत्तमूकान् संस्कुर्यादिति। उपनेतृक्रममाह,

वृद्धगर्गः।

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः।
उपायनेऽधिकारी स्यात् पूर्वाभावे परः परः॥

माधवीये वृद्धमनुरप्येवम्।

तथा,

पितैवोपनयेत्पुत्रं तदभावे पितुः पिता।
तदभावे पितुर्भ्राता तदभावे तु सोदरः॥

आश्वलायनः।

एकमातृप्रसूतानां कन्ये वा पुत्रकौ तयोः।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम्॥ इति।

अधिकारसिद्धये प्रायश्चित्तमाह,

विष्णुः।

कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च वटुश्चरेत्।

Padumawati, Fasc. 1–4 @ 2/ ... ... ... Rs. 8 0
Pariçiṣta Parvan, (Text) Fasc. 1-5 @ /6/ each ... ... ... 1 14
Prākrita-Paingalam, Fasc. 1–7 @ /6/ each ... ... ... 2 10
Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... 1 14
Ditto (English) Part II, Fasc. 1 ... ... ... 0 12
Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... 1 8
Parāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each ... ... ... ... ... 7 8
Parāçara, Institutes of (English) ... ... ... 0 12
Prabandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... ... 2 4
*Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... 12 6
Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each ... ... 1 8
Ditto (English) Fasc. 1–3 @ /12/ each ... ... 2 4
Sraddha Kriya Kaumudi, Fasc. 1–4 ... ... ... ... 1 8
Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... ... 0 12
*Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... 12 0
Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Trantra Vartika (English) Fasc. 1 ... ... ... 0 12
Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 2–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... ... 14 4
Tattvarthadhigama Sutrom, Fasc. 1 ... ... ... ... 0 6
Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-3 @ /6/ ... ... ... 1 2
Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
Upamita-bhava-prapañca-kathā (Text) Fasc. 1-6 @ /6/ each ... 2 4
Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... 4 8
Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... 5 4
Varsa Krya Kaumudi, Fasc. 1–6 @ /6/ ... ... ... 2 4
*Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each 4 8
Vidhano Parigata, Fasc. 1–3 ... ... ... ... 1 2
Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... 0 12
Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... 2 10
Vṛhannāradīya Purāṇa, (Text) Fasc. 2–6 @ /6/ ... ... ... 1 14
Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... 2 4

## *Tibetan Series.*

Pag-Sam Ṭhi S'īn, Fasc. 1–4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5 @ 1/ each ... ... ... ... ... ... 13 0
Rtogs *b*rjod *d*pag *h*khri S'īn (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... 10 0

## *Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... 4 14
Al-Muqaddasi (English) Vol. I, Fasc. 1–3 @ /12/ ... ... 2 4
Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... 22 0
Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... 29 12
Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... 37 0
Ditto English Fasc, 1–8 @ 1/ each ... ... ... 8 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 6
Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Catalogue of Arabic Books and Manuscripts ... ... ... 1 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... 21 0
Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... 14 0
Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... 3 0
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... 3 6
Ditto of Azādī, (Text) Fasc. 1–4 @ /6/ each ... ... 1 8
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... 0 12
History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... 4 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... 1 2
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... 38 4
Maāsir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1–10; Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... ... 13 2
Maghāzī of Wāqidī, (Text) Fasc. 1–5 @ /6/ each ... ... 1 14

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | Rs. | |
|---|---|---|---|
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1-15 @ /6 each | ... | Rs. 5 | 10 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ /12/ each | ... ... | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1-19 @ /6/ each | ... ... | 7 | 2 |
| Ma'āsir-i-'Ālamgīrī, (Text), Fasc. 1-6 @ /6/ each | ... ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 | ... ... ... ... | 0 | 6 |
| Nizāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each | | 1 | 8 |
| Riyāzu-s-Salātīn, (Text) Fasc. 1-5 @ /6/ each | ... ... ... | 1 | 14 |
| Ditto Ditto (English) Fasc. 1-3 | ... ... ... | 2 | 4 |
| Tabaqāt-i-Nāṣirī, (Text) Fasc. 1-5 @ /6/ each | ... ... ... | 1 | 14 |
| Ditto (English) Fasc. 1-14 @ /12/ each | ... ... | 10 | 8 |
| Ditto Index | ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni (Text) Fasc. 1-7 @ /6/ each... | | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1-6 @ /6/ each... | | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each | ... ... | 3 | 0 |
| Wis o Rāmīn, (Text) Fasc. 1-5 @ /6/ each | ... ... ... | 1 | 14 |
| Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /6/ each | .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 | ... ... ... ... | 0 | 12 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

| No. | Publication | Rs. | |
|---|---|---|---|
| 1. | Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... | 50 | 0 |
| 2. | Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3 | Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) & 1901 (7), 1902 (9), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members. | | |
| | *N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784-1888 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... ... | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn ... ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. | Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. | Khizānatu-l-'ilm ... ... ... ... ... | 4 | 0 |
| 11. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 12. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 13. | Sharaya-ool-Islam ... ... ... ... ... | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 15. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 16. | Kaçmīraçabdāmṛta, Parts I and II @ 1/8/ ... ... ... | 3 | 0 |
| 17. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |

---

| | | Rs. | |
|---|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1-29 @ 1/ each | ... ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra | ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

2-11-03.

**Books are supplied by V.-P.P.**

BIBLIOTHECA INDICA:

A COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1114.

# BĀLAMBHAṬṬĪ.

## A COMMENTARY ON THE MITĀKṢARĀ.

# बालम्भट्टी

## लक्ष्मी-इत्यपरनाम्नी

मिताक्षराव्याख्या

स्वपत्नीलक्ष्मीदेवीनाम्ना

बालम्भट्टपायगुण्डेन

विरचिता ।

श्रीगोविन्ददासेन संशोधिता ।

VOL. I, FASCICULUS II.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1905.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.**

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1–2 | 0 | 12 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–5 @ /6/ | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 2–5 @ /6/ each | 1 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 2–5; Vol. II. Fasc. 1–5 @ 1/ each | 9 | 0 |
| Bāla Bhaṭṭi, Vol. I, Fasc. 1 | 0 | 6 |
| Baudhayana Srauta Sutra, Fasc. 1–2 @ /6/ each | 0 | 12 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–5 | 1 | 14 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1–3 | 1 | 2 |
| Catadusani, Fasc. 1–2 | 0 | 12 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/ each | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. III, Fasc. 1–5 | 4 | 8 |
| Çatasahasrika-prajnaparamita (Text) Part I, Fasc. 1–8 @ /6/ each | 3 | 0 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each; Vol IV, Fasc. 1–3 | 21 | 0 |
| Çlokavartika, (English) Fasc. 1–5 | 3 | 2 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–17 @ /6/ each | 5 | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4 @ /6/ each; Vol 4, Fasc. 1 | 6 | 0 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each | 1 | 2 |
| Dan Kriya Kaumudi, Fasc. 1-2 | 0 | 12 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc. 1–7 | 2 | 10 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each | 1 | 8 |
| Kāla Viveka, Fasc. 1–6 | 2 | 4 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 & Vol. II, Fasc. 1–12 @ /6/ each | 7 | 14 |
| Manuṭīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–8 @ /12 each | 6 | 0 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each | 4 | 14 |
| Nyāyavārtika, (Text) Fasc. 1–6 @ /6/ | 2 | 4 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each | 5 | 4 |
| Nityacarapaddhati Fasc. 1–7 (Text) @ /6/ | 2 | 10 |
| Nityacarapradiph Fasc. 1–5 | 1 | 14 |
| Nyayabinduṭīkā, (Text) | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6 Vol. II, Fasc. 1–3 @ /6/ each | 3 | 6 |

सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन् ॥
सहस्रं द्वादशाहस्य सावित्रीं प्रजपेद्बुधः ।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत् स्मृतम् ॥ इति ।

तथा,

नान्दीश्राद्धे कृते पश्चादनध्यायस्त्वकालिकः ।
मौञ्जीबन्धं तदा कुर्याद्वेदारम्भं न कारयेत् ॥

अकालिकः गर्जनिर्घातादिनिमित्तकः । यदि भवेदिति शेषः । आश्वलायनानामुपनयनदिने वेदारम्भाभावाद्वेदारम्भाकरणे नोपनयनं न कुर्यात् । तदूर्ध्वं तु मुहूर्त्ते श्राद्धान्तरपूर्वकमुपनयनं यथाकालं कुर्यात् । यदा गर्जाद्यनध्यायशङ्का तदा द्विवैवानुप्रवचनीयचरुं श्रपयेत् । होमस्तु सायंसन्ध्योत्तरमेव । तथा सति नानध्यायदोषः ।

तदुक्तं संग्रहे ।

न सन्ध्यागर्जिते काले न वृष्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्त्तते ॥

तथा,

ब्रह्मौदनं पचेदह्नि पक्वमन्नं न दुष्यति ।

तथाचोपनयनानुप्रवचनीयचरुश्रपणयोरन्तरा ऽनध्याये पुनरुपनयनम् ।

पुनरुपनयने निमित्तान्तराण्याह,

मनुः । (अ. ११ । श्लो. १५० ।)

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ इति ।

विष्णुरपि ।

विड्वराहग्रामकुक्कुटगोगोमांसभक्षणेषु च प्रायश्चित्तान्ते पुनः संस्कारं कुर्यादिति ।

तथा बौधायनः ।

सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।

अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥ इति ।

शाखारण्डोऽपि स्वशाखाग्रहणकाले पुनरुपनेयः ।

इममर्थं पुनरुपनयने विधिविशेषं च कारिकाकार आह ।

वेदान्तरमधीत्यैव स्ववेदं ये त्वधीयते ।

उपनीतिरियन्तेषामलङ्करणवर्जिता ॥

यदैतदुपनीतस्य प्रायश्चित्तं यदा पतेत् ।

कृताकृतश्च वपनं मेधाजननमेव च ॥

मेधाजननसद्भावे व्रतचर्या भवेदिह ।

अनुप्रवचनीयश्च तदभावे द्वयं न च ॥

परिधानं च कार्यं स्याग्निमिन्धानन्तरं त्विदम् ।

पूर्वस्या वाचयेत् स्थाने तत्सवितुर्वृणीमहे ॥ इति ।

पूर्वस्याः गायत्र्याः ।

तथाश्वलायनगृह्यम् । (अ. १ क. २२)

तत्सवितुर्वृणीमहे इति सावित्रीमिति ।

व्यासः ।

भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।

उपोषितः सुतां दद्यादर्चिताय द्विजन्मने ॥ इति ।

## अथ प्रसङ्गाद्गायत्र्युपदेशविषये किञ्चिदुच्यते ।

तत्र तावत्,

### कात्यायनसूत्रं हरिहरभाष्यञ्च ।

अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहावर्त्तयन् । ( कां. २ कं. ३ )

अथ आसनानन्तरं अस्मै ब्रह्मचारिणे सावित्रीं सवितृदेवत्यां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टाम् अन्वाह उपदिशति । कथंभूताय प्रत्यङ्मुखाय । पुनः कथंभूताय उपविष्टाय । क्व अग्नेरुत्तरस्यान्दिशि । तथोपसन्नाय पादोपसंग्रहणादिना भजमानाय । तथा समीक्षमाणाय सम्यगाचार्यमवलोकयते । तथा आचार्येण सम्यगवलोकिताय । पक्षान्तरमाह । दक्षिणतः अग्नेर्दक्षिणस्यान्दिशि तिष्ठते ऊर्ध्वीभूताय वा आसीनाय उपविष्टाय इत्येके आचार्याः सावित्रीप्रदानं मन्यन्ते । कथमन्वाह । पच्छः पादं पादम् । अर्धर्चशः तदनु अर्धर्चमर्धर्चम् । तदनु सर्वां तृतीयेन वारेण सह मिलित्वा आवर्त्तयन् पाठयन् ।

### शाङ्खायनः ।

गायत्रीं ब्राह्मणायानुब्रूयात् त्रिष्टुभं क्षत्रियाय जगतीं वैश्याय । सावित्रीन्त्वेव उत्तरेणाग्निमुपविशतः । अन्वक्षादिति उच्यमानायां सावित्र्यामग्निं स्थापिताग्निमुत्तरेणाचार्यमाणवकौ उपविशतः । प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः । आचार्यमाणवकौ प्राङ्मुखप्रत्यङ्मुखावुपविशतः । अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदी-

क्षौमपराजितां वा। एकः श्रोता दक्षिणतो निषीदेदित्येतन्निषिध्यते ऽनेनसूत्रेण। अधीहि भो ३ इत्युक्त्वा आचार्यः। आचार्यः अधीहि भो ३ इति माणवकमुक्त्वा वक्ष्यमाणं कुर्यात्। आहूतो ऽध्ययनं कुर्यादिति स्मृतिः। ॐ कारं प्रयुज्याथेतरं वाचयति सावित्रीं भो ३ अनुब्रूहीति। अथास्मै सावित्रीमन्वाह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चशः सर्वशश्च। उपस्थितं बटुं गायत्रीमुपदिशेत्।

तथाच कात्यायनः।

सावित्र्या ब्राह्मणमुपनयेत् त्रिष्टुभा राजन्यं जगत्या वैश्यं सर्वेषां वा सावित्रीमिति। तदेव स्पष्टमाचष्ट,

शातातपः।

तत्सवितुर्वरेण्यमिति सावित्रीं ब्राह्मणस्य, देवसवितुरिति राजन्यस्य, विश्वारूपाणीति वैश्यस्य।

सा च प्रणवव्याहृतिपूर्वा पच्छो ऽर्धर्चशः सर्वशश्चोपदेष्टव्या। त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदेवताकां देवसवितुरित्यादिकां वाजपेये विनियुक्तां क्षत्रियाय। प्रजापतिदृष्टां जगतीछन्दस्कां सवितृदेवताकां रुक्मपाशप्रमोचने उखासम्भरणे विनियुक्तां विश्वारूपाणि प्रतिमुञ्चतेति वैश्यायोपदिशेत्। सर्वेषां वोक्तलक्षणां गायत्रीमेव ब्रूयादित्यर्थः। अथच गायत्र्युपदेश आपस्तम्बानाम् अग्नेः पश्चाद्दक्षिणत उत्तरतो वा भवति। नन्वपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति पुरस्तात्प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणम् पादमन्वारभ्याह सावित्रीं भो अनुब्रूहीति तस्मा अन्वाह तत्सवितुरिति अस्मात् सूत्रादग्नेः

पश्चिमदेशे एव प्राप्त इति चेन्न । तस्य वाक्येन शेषाङ्गत्वात्तस्मादिति सर्वनाम्ना देशादिविशिष्टस्य परामर्शात् । उपदेशाङ्गत्वे कल्प्यमानेऽपि सूत्रान्तरोक्तदेशग्रहणेन तयोरपि प्राप्तेः ।

न च

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।

विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

इतिवाक्यविरोध इति वाच्यम् । तस्य स्वसूत्रोक्तविश्रम्भणीयत्वेन तदनुष्ठानमेवोचितमित्येतत्प्रतिपादनेन स्तुतिमात्रपरत्वात् । अन्यथा आश्वलायनादिभिः स्वस्वसूत्रोक्तमनुद्धरणप्रायश्चित्तं चातुर्मास्य-विवाहोपनयनादौ संवत्सरदिवसनक्षत्रादिकं त्यक्त्वा सूत्रान्तरोक्तग्रहणं विरुध्येत । तस्मात् स्वसूत्रोक्तविरुद्धस्यापि सूत्रान्तरोक्तस्य ग्रहणं भव-त्येव । प्रतिपादितं चैतत् "नित्यो धार्यः" (आ.श्र. प. २ खं. ५ सू. १५ ।) इत्येतत्सूत्रव्याख्याने सुदर्शनभाष्यकारेण । तत्रान्यत्र प्रपञ्चितम् । युक्तं चैतत् । एकस्य कर्मणः शाखाभेदेनानेकेषां विरुद्धानामङ्गा-नामाम्नातानां व्यवस्थायां प्रमाणाभावात् । ननु सूत्रकारेण कृतोप-संग्रह एव प्रमाणमिति चेन्न । अशोकवनिकान्यायेन कस्यचिदेवोप-संग्रहात् । तस्मात् सूत्रान्तरोक्तस्यापि ग्रहणं युक्तमेवेति दिक् ।

प्रागुक्तं गुरुचरणा अपि ।

विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।

अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥

इति नारदः ।

पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।

अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥

इति वसिष्ठः।

तथा

प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे।

मधुं विनोपनीतस्तु पुनः संस्कारमर्हति ॥

इति अन्यच्च। ज्योतिर्मनुः।

अनध्यायोपनीतस्तु पुनः संस्कारमर्हति।

गलग्रहे प्रदोषे च स्वल्पायुरुपजायते ॥ इति।

अत्रानध्यायशब्देन नित्या नैमित्तिकाश्च गृह्यन्ते। अविशेषात्।

कृष्णे प्रदोषे ऽनध्याये शनौ निश्यपराह्णके।

प्राक्सन्ध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे ॥

अष्टका च समुद्दिष्टा सप्तम्यादिदिनत्रयम्।

नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत् ॥

अनध्याये चोपनीतः पुनः संस्कारमर्हति।

इत्यन्यच्च।

अनध्यायाः स्मृता भूत १४ त्रयाष्टम्यर्कसंक्रमाः।

शुक्ले द्वी २ शा ११ र्क १२ दिक् १० तिथ्यः शुक्ल २ पौष १० तपः ११ शुचेः ४ ॥

मन्वाद्याश्च युगाद्याश्च स्मृत्युक्ताः सर्वएव हि।

इति ज्योर्निबन्धधृतवचनात्। पुनरप्यत्र प्राक्सन्ध्यागर्जितग्रहण-मीदृशानामप्यत्र ग्रहणमवयुत्यानुवादः। यद्वा प्राक्सन्ध्यागर्जितस्य पुनर्ग्रहणं दोषाधिक्याय। तस्याप्यनध्यायत्वात्। यद्वा नैमित्तिक-

पुनरुपनयनस्यापि तत्र निषेधार्थमिदं प्रदोषनिषेधवत् । निमित्ता-नन्तरं नैमित्तिकमिति न्यायेन तत्र तत्प्रसक्तिः । एवं रात्रिनिषेधो-ऽपि तत्परः ।

एतेन

चतुर्द्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा ।

दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च ॥

इति हेमाद्रिधृतवचनेन तदितरेषामनित्यानध्यायत्वसूचनादे-ष्वनध्यायशब्देन न तदतिरिक्तग्रहणम्, नित्यतद्ग्रहणेनोपपत्तावनित्य-तद्ग्रहणे मानाभावादित्यपास्तं । दुर्मेधसामित्युक्त्याऽन्यान्प्रति तेषामपि नित्यत्वबोधनेन विनिगमनाविरहाच्च । किं चैवं युगाद्यनध्यायस्याप्य-नित्यत्वेनाग्रहणेन,

या चैत्रवैशाखसिता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य ।

कृष्णे द्वितीयोपनये प्रशस्ता

इति च वसिष्ठवाक्यवैयर्थ्यापत्तिः । तत्र चैत्रशुक्लतृतीया मन्वादिः । वैशाखशुक्ला सा युगादिः । माघशुक्ला सप्तमी मन्वादिः । फाल्गुनीपूर्णिमोत्तरं द्वितीया । *चातुर्मास्यद्वितीया । आसामनध्यायत्वेऽपि व्रतबन्धे प्राशस्त्यमिति तद्व्याख्यातारः । अपि च

त्रयोदश्यादिचतुष्कञ्च सप्तम्यादिदिनत्रयम् ।

चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः ॥

इत्युक्तचतुर्द्दश्यष्टमीपर्वप्रतिपदां गलग्रहत्वादेव निषेधे सिद्धे प्रदोषे नित्यानध्याये इति वचने ऽनध्यायग्रहणवैयर्थ्यापत्तिः । एवञ्च

* अत्र प्रमाणं नोपलब्धम् ।

गर्जाद्यनध्यायेषु उपनीतस्याकाले कृतमकृतमेवेति ब्राह्मणत्वासम्पत्त्या अपूर्वोपनयनविधिना पुनरप्युपनयनकार्यमिति सिद्धम् । यस्त्वाश्वलायनसूत्रे ऽथोपेतपूर्वस्येत्यादिना पुनरुपनयनमुक्तम् । तस्य न प्रकृते प्रवृत्तिः । उपेतपूर्वत्वाभावात् । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवकुर्यादिति तत्सूत्रव्याख्याने वृत्तिकृतोक्तत्वात् । तथैव जयन्तोक्तेश्च । एतेन,

नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।
मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ॥ इति

वसिष्ठवचनाद्गर्जाद्यनध्याये न दोष इति परास्तम् । तस्य कालातिक्रमविषयत्वात् ।

प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे रवौ ।
चन्द्रे बलयुते लग्ने वर्णानामतिलङ्घने ॥

इति व्यासवचनैकवाक्यत्वात् । यत्त्वेतद्वचसां नैमित्तिकानामनध्यायत्वं वेदाध्ययनमात्रविषयमिति । तन्न । कृष्णे प्रदोषे इत्यादिप्राग्लिखितवचनेन मृत्युक्ताः सर्वएव चौलेनेन च विरोधापत्तेः । गर्जाद्यनध्याया याज्ञवल्क्यादिभिरुक्ताः ।

तत्र याज्ञवल्क्यः ।

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ (अ. १ श्लो. १४४)
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ (अ. १ श्लो. १४५ इति ।)

इदमकालविषयम् ।

**धर्मप्रश्ने।**

विद्युत् स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके इति।

एतत्सन्ध्याकालातिरिक्तविषयम्।

**ऐतरेयब्राह्मणे।**

अपर्तौ वर्षे त्रिरात्रमित्यत्र वर्षो विद्युद्गर्जयोरुपलक्षणम्। अत्र **श्रुतिभाष्ये** ऽपर्तुशब्देन श्रावणभाद्रातिरिक्तः काल इति **माधवः।**

तच्च वक्ष्यमाणन्यायेन बोध्यम्।

अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः।
यावच्चरति वै तावद्वर्षाकालं मुनयो विदुः॥ इति

**रत्नावली**धृतवचनात्।

**हरदत्तस्तूज्ज्वलायाम्,**

यत्र देशे यो वर्षाकालस्ततो ऽन्यत्रापर्तुरित्याह। तद् **रत्नावली**-धृतवचनविरुद्धम्। यत्तु,

पौषादिचतुरो मासान् जाता वृष्टिरकालजा।
व्रतं यात्रां विवाहञ्च वर्जयेत्सप्त वासरान्॥ इति।

तत्तु यात्राविवाहसाहचर्यात् व्रतेऽपि दृष्टदोषबोधकम्। अदृष्टानुत्पादकदोषस्तु दिनत्रयमेवेति बोध्यम्।

यत्तु **मनुना,** (अ. ४ श्लो. १०३)

विद्युत्स्तनितवर्षेषु महोल्कानां च सम्प्लवे।
आकालिकमनध्यायमेतेषु मनुरब्रवीत्॥

इत्युक्तम्।

तत्तु सन्ध्याकालातिरिक्तकाले एकैकोपजने बोध्यम्। परेद्युर्यावत्स कालस्तावत्कालमाकालन्तत्रभव आकालिकः। सम्प्लवो ऽसकृदुपजननः। सायंसन्ध्यास्तनिते रात्रिः। प्रातःसन्ध्यास्तनिते ऽहोरात्रमिति हारितोक्तन्तु ऋतुविषयम्। यत्तु स्वल्पेन वसिष्ठनाम्नोदाहृतं वचनम्,

> अत्ये ऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति।
>
> तद्दिने स्यादनध्यायो व्रतन्तत्र विवर्जयेत्॥ इति।

तदपि समूलत्वे ऽकालिकगर्जविषयम्। हारितैकवाक्यत्वात्। शरदि वैश्यस्योपनयनविधानेन तद्विषये पूर्वोक्तस्यैव निषेधस्यानुवादः। तत्र काले वृष्टौ यथा ऽनध्यायाभावस्तथैतद्विषयेऽपीति शङ्कावारणार्थस्य स इत्येके। सामान्यतस्तद्दिने एवानध्यायो न तु त्र्यहमित्येवम्परिसङ्ख्यायां याज्ञवल्क्येन विरोधः। ऋतुविषये त्वधिकाप्राप्तेर्व्यर्थतैव वचनस्यापतति। व्रतविवर्जने ऽनध्यायत्वमेव निमित्तमतस्तदुक्तिः। व्रतन्तत्रैव वर्जयेदिति नियमे चतुर्दश्यादौ तदापत्तिः। नैमित्तिकानध्यायेषु पूर्वसन्ध्यागर्ज एव। तत्रापि तद्दिने एवेति नियमे तत्र गर्जादिसन्निपाते उपनयनापत्तिः। किञ्चैवं द्वेधापरिसङ्ख्याकल्पनापेक्षया महानाम्न्यादिव्रतविषयत्वमस्य वक्तुमुचितम्। नैमित्तिकमनध्यायमित्यादिप्राग्लिखितवसिष्ठवचनेन वेदव्रतेषु कालातिक्रमे तदनुज्ञया तदनतिक्रमे तेषाम्न्याय्यत्वप्रतीतेः। प्रतिपद्वत् महाव्रतप्रकरणीयैतरेयब्राह्मणाच्चेत्यन्ये। एतेन मध्यदेशे माघे नियतवृष्टिसत्त्वेन तस्यापि कालत्वेन सन्ध्यागर्जादौ तद्देशे नानध्याय इति निरस्तम्। कालगर्जादावपि दिनमात्रमनध्यायस्य सत्त्वाच्च।

यत्तु,

गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः ।
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥

इत्युपक्रम्य,

पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ।

इति । तत्तु षड्वा वै मासा इति श्रुत्यनुसारेण षट्सु मासेषु वर्षव्यवहारान्नानुपपन्नमिति न तदेकवर्षमध्ये द्वौ वर्षाकालावित्यत्र गमकम् ।

यत्तु ज्योतिर्निबन्धे ।

नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः ।
तदोपनयनङ्कार्यं वेदारम्भं विवर्जयेत् ॥

इत्युक्तं, तन्न बह्वृचविषयम् । तेषामुपनयने वेदारम्भाभावेन निषेधासम्भवात् । तदर्थस्तु नान्दीश्राद्धे कृते यद्यकालभवो ऽनध्यायः स्यात्तदोपनयनङ्कार्यं वेदारम्भस्तु वर्ज्य इति बहवः प्रामाणिकाः । यत्तु कार्यमित्यन्तं सर्वसाधारणं निषेधस्तु सम्भवत्प्राप्तिकविषय इति । तन्न । सन्नियोगशिष्टन्यायेनोभयोरेकविषयत्वौचित्यात् । वाक्यभेदापत्तेश्च । वेदारम्भातिरिक्ताङ्गकमुपनयनं कार्यमित्येकवाक्यतौचित्यात् । वेदारम्भन्तु वर्जयेदिति पाठे तथाऽर्थासम्भवाच्चेति दिक् । उपनयनोत्तरं ब्रह्मौदनपाकात्पूर्वं गर्जितादिसम्भावनायां दिवैव चरुश्रपणं कृत्वा ऽस्तमिते होमः कार्यः ।

न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥

इति सङ्ग्रहोक्तेः ।

पलमचं न दुष्यतीति पाठान्तरम्। यदप्रपणात्पूर्वमेव सन्ध्या-गर्जादौ पुनरुपनयनमेवेति केचित्। अन्ये तु

औत्पातिकमनध्यायं प्राग् ब्रह्मौदनपाकतः।
अतादूर्ध्वं नेष्टमाहुः शान्त्या ऽऽहेष्टं पराशरः॥

इति ज्योतिःशास्त्रोक्तेः।

ब्रह्मौदनविधेः पूर्वमनदोषे गर्जितं यदि।
तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत्॥
तत्र शान्तिविधानं तु वक्ष्ये शास्त्रानुसारतः।

इत्यादिना शान्तिमुक्त्वा "ततो ब्रह्मौदनम्पचेत्,, इति विधान-कालोक्तेश्च शान्तिं कृत्वा पाकः कार्यः। शान्तिमकृत्वा तत्करणे तु पुनरुपनयनम्। वस्तुतः शान्तिरध्ययनविघ्नादिदृष्टदोषनिवारणाय। पुनरुपनयनन्तु ब्राह्मण्यानुत्पादाद्भवत्येवेत्याहुः।

## अथ स्पष्टार्थं सप्रपञ्चः पुनरुपनयनविधिरुच्यते।

पुनः संस्कारः पुनरुपनयनम्। तच्च त्रिविधम्। प्रत्यवायनिमित्त प्रायश्चित्तत्वेन विहितं, निमित्तविशेषेण कृतोपनयनस्य वृथाचेष्टापत्तौ तत्फलार्थत्वेन विहितं, वेदान्तराध्ययनचिकीर्षायां तदर्थत्वेन विहित-मिति। तत्राद्यं तावत्

### बौधायनः।

अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनमिति।

औषधान्तराभावव्याध्युपशमार्थं पैष्टीपाने एतदिति **मदनरत्ने।**

### वसिष्ठः।

मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ

घृतप्राशनं पुनः संस्कारश्चेति। अत्र सुरायाश्चेति सुराशब्दो न पैष्टीपरः तदज्ञानपाने द्वादशाब्दोक्तेः।

शूलपाणौ यमः।

अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ इति।

यद्यपि संस्कारशब्दो जातकर्मादिसाधारणस्तथापीदृशविधिषु संस्कारशब्देनोपनयनमेवोच्यते तस्य द्विजत्वसम्पादनरूपातिशययोगेन बुद्धारोहात्। अनन्तरवक्ष्यमाणमनुवचसि वाक्यशेषेण तथा प्रतीतेश्च।

भविष्ये।

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
तप्तकृच्छ्राञ्चितेनेह केवलेन न शुध्यति॥

एतदप्युक्तव्याध्युपशमार्थं पाने एवाज्ञानकृते बोद्धव्यम्।

रेतोमूत्रपुरीषाणां गौडीमाध्व्योश्च प्राशने।
क्रव्यादपशुविष्ठानां संस्काराच्छुद्धिरिष्यते॥

मनुः। (अ. ११ श्लो. १५०।१५१)

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥
वपनं मेखला दण्डो भैक्षचर्या व्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि॥ इति।

एतदतीतसुरासम्पर्कविषयम्। तप्तकृच्छ्रपूर्वकस्यैष विधिर्ज्ञेयः। वक्ष्यमाणगौतमस्मृतिनिर्द्दिष्टविण्मूत्रसाहचर्यात्।

विष्णुः ।

मद्यानामद्यानामन्यतरस्य प्राशने चान्द्रायणं कुर्यात् । लशुन-पलाण्डुगृञ्जनतद्गन्धिविड्वराहग्रामकुक्कुटनरगोमांसभक्षणे च सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादिति ।

ज्ञानतः सकृद्भक्षणे एतदिति शूलपाणिः ।

तत्रैव शातातपः ।

उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनं तप्तकृच्छ्रं चेति ।

ज्ञानाभ्यासे एतदिति शूलपाणिः ।

मिताक्षरायां पैठीनसिः ।

अविक्षरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रं पुनरुपनयनं चेति ।

बृहस्पतिः ।

रेतोमूत्रपुरीषाणां शुद्धौ चान्द्रायणं चरेत् ।

तप्तकृच्छ्रपूर्वकं पुनः संस्कारं प्रकृत्य

गौतमः ।

मूत्रपुरीषकुणपरेतसां प्राशने चैवमिति ।

अत्र चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था संस्कारस्तूभयत्र तुल्य एवेति शूलपाणिः ।

हेमाद्रौ ।

प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति । इति ।

आचारोद्योते वृद्धमनुः ।

जीवन्यदि समागच्छेत् घृतकुम्भे नियोजयेत् ।

उद्धृत्य स्नापयित्वा ऽस्य जातकर्मादि कारयेत् ॥

द्वादशाहं व्रतचर्या त्रिरात्रमथवा ऽस्य तु।
स्नात्वोद्वहेत्ततो भार्यामन्यां वा तदभावतः॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्।
अथैन्द्राग्नेन पशुना गिरिं गत्वा तु यत्र तु॥
इष्टिमायुष्मतीं कुर्याद्दीप्सितांश्च क्रतूंस्ततः। इति।

**प्रायश्चित्तोद्योते बौधायनः।**

सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति॥ इति।

एतच्च तीर्थयात्रां विना गमने सति बोध्यम्।

तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति। इति

**प्रयोगपारिजाते बौधायनस्मरणात्।**

**मनुः।** (इदं **मनु**पुस्तके नोपलभ्यते)

चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणञ्चरेत्।
बुद्धिपूर्वन्तु कृच्छ्राब्दं पुनः संस्कारमेव च॥ इति।

अभ्यासविषयमिदमिति **मदनरत्ने।**

**पाराशर्यप्रायश्चित्तकाण्डे।**

अजिनमेखला दण्डो भैक्षचर्या व्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि॥

ब्रह्मचारिणमधिकृत्य **पैठीनसिः।**

मधुमांसाशने त्रिरात्रमुपवासः पुनरुपनयनं चेति।

अयञ्च त्रिरात्रोपवासः प्राजापत्याशक्तस्येति **मदनरत्ने।**

एतयोरज्ञानभक्षणे कृच्छ्रः । मत्या पराकः । अभ्यासे द्विगुणं पुनःसंस्कारश्चेति स्मृत्यर्थसारे ।

तथा तत्रैव मातापितृगुर्वाचार्योपाध्यायेभ्योऽन्येषां प्रेतसंस्कारे ब्रह्मचारिणः पुनरुपनयनङ्कार्यमिति ।

तथा रेतोविण्मूत्रकरनिर्मथितदधिवर्हिर्वैदिपुरोडाशभक्षणानामत्यन्ताभ्यासे अतिकृच्छ्रः पुनरुपनयनं चेति ।

पराशरः ।

यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥
स चरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ।
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥

वसिष्ठः ।

संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि ।
स कुर्यात् कृच्छ्रमश्रान्तः षण्मासात् प्रत्यनन्तरम् ॥ इति

अत्र विप्रस्य षाण्मासिकः कृच्छ्रः चत्रियस्य चान्द्रत्रयं वैश्यस्य कृच्छ्रत्रयमिति व्यवस्थोक्ता मिताक्षरायां तत्प्रघट्टके ।

स्मृत्यन्तरे ।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥ इति ।
कर्मनाशाजलस्पर्शो गयायाञ्चाऽन्यविषयकः ।
कर्मनाशाजलस्पर्शः पारेऽथ गमनन्तथा ।
सर्वपुण्यक्षयकरं गयायाञ्च विना मुने ॥

